यातु, प्रस्तुतमनुसर्वीयताम् । मलयाधित्यकाया समासितो वर्तते चित्रवर्णो राजा तदधुना किं विधेयम् ।' मन्त्री वदति—' देव ! आगतप्रणिधिमुखान्मया श्रुत तन्म ामन्त्रिणो गृध्रस्योपदेशो यच्चित्रवर्णेनानादर कृत । ततोऽसौ मूढो जेतु शक्य । तथा चोक्तम्—

**लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।**
**मूढो योधावमन्ता च सुखच्छेद्यो रिपुः स्मृतः ॥११०॥**

ततोऽसौ यावदस्मद्दुर्गद्वाररोध न करोति तावन्नद्यद्रिवनवर्त्मसु तद्बलानि हन्तु ारसादय सेनापतयो नियुज्यन्ताम् । तथा चोक्तम्—

**दीर्घवर्त्मपरिश्रान्तं नद्यद्रिवनसंकुलम् ।**
**घोराग्निभयसन्त्रस्तं क्षुत्पिपासार्दितं तथा ॥ १११ ॥**
**प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीडितम् ।**
**असंस्थितमभूयिष्ठं वृष्टिवातसमाकुलम् ॥ ११२ ॥**
**पङ्कपांसुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतम् ।**
**एवंभूतं महीपालः परसैन्यं विघातयेत् ॥ ११३ ॥**

ान्यच्च—

**अवस्कन्दभयाद्राजा प्रजागरकृतश्रमम् ।**
**दिवासुप्तं समाहन्यान्निद्राव्याकुलसैनिकम् ॥ ११४ ॥**

अतस्तस्य प्रमादिनो बल गत्वा यथावकाश दिवानिश घ्नन्त्वस्मत्सेनापतय. । तथानुष्ठिते चित्रवर्णस्य सैनिका सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्ग' स्वमन्त्रिण दूरदर्शिनमाह—' तात ! किमित्यस्मदुपेक्षा क्रियते । किं क्वाप्यविनयो ममास्ति । तथा चोक्तम्—

**न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।**
**श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ११५ ॥**

अपर च—

**दक्षः श्रियमधिगच्छति पथ्याशी कल्पतां सुखमरोगी ।**
**उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः ॥ ११६ ॥'**

गृध्रोऽवदत्'देव । शृणु—

**अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।**
**परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ ११७ ॥**

अन्यच्च—

**पानं स्त्रीमृगया द्यूतमर्थदूषणमेव च ।**
**वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥११८॥**

किं च—

**न साहसैकान्तरसानुवर्तिना**
**न चाप्युपायोपहतान्तरात्मना ।**
**विभूतयः शक्यमवाप्तुमूर्जिता**
**नये च शौर्ये च वसन्ति सम्पदः ॥ ११९ ॥**

त्वया स्वबलोत्साहमवलोक्य साहसैकवासिना मयोपन्यस्तेष्वपि मन्त्रेष्वन-वधान वाक्पारुष्य च कृतम् । अतो दुर्नीते फलमिदमनुभूयते । तथा चोक्तम्—

**दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः**
**सन्तापयन्ति कमपथ्यभुजं न रोगा ।**
**कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः**
**कं स्त्रीकृता न विषयाः परितापयन्ति ॥ १२० ॥**

अपर च—

**मुदं विषादः शरदं हिमागम-**
**स्तमो विवस्वान्सुकृतं कृतघ्नता ।**
**प्रियोपपत्तिः शुचमापदं नयः**
**श्रियः समृद्धा अपि हन्ति दुर्नयः ॥ १२१ ॥**

ततो ममाप्यालोचितम्—' प्रज्ञाहीनोऽय राजा । नो चेत्कथ नीतिशास्त्रकथा-कौमुदी वागुल्काभिस्तिमिरयति । यत —

**यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।**
**लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥१२२॥**

इत्यालोच्य तूष्णीं स्थितः ।' अथ राजा बद्धाञ्जलिराह—' तात ! अस्त्ययं ममापराधः इदानीं यथावशिष्टबलसहितः प्रत्यावृत्त्य विन्ध्याचलं गच्छामि तथोपदिश ।' गृध्रः स्वगतं चिन्तयति—' क्रियतामत्र प्रतीकारः । यतः—

देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च ॥ १२३ ॥

मन्त्री प्रहस्य ब्रूते—' देव ! मा भैषीः । समाश्वसिहि । शृणु, देव !

मन्त्रिणां भिन्नसंधाने भिषजां सान्निपातके ।
कर्मणि व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः॥१२४॥

अपरं च—

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥१२५॥

तदत्र भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापबलसहितं त्वामचिरेण कालेन विन्ध्याचलं नेष्यामि ।' राजाह—'कथमधुना स्वल्पबलेन तत्सपद्यते ?' गृध्रो वदति—' देव ! सर्वं भविष्यति । यतो विजिगीषोरदीर्घसूत्रता विजयसिद्धेरवश्यभाविलक्षणं तत्सहसैव दुर्गावरोधः क्रियताम् ' अथ प्रहितप्रणिधिना बकेनागत्य हिरण्यगर्भस्य तत्कथितम् ' देव ! स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपष्टम्भेन दुर्गावरोधं करिष्यति ।' राजाह—' सर्वज्ञ ! किमधुना विधेयम् ?' चक्रो ब्रूते—' स्वबले सारासारविचारः क्रियताम् ' तज्ज्ञात्वा सुवर्णवस्त्रादिकं यथार्हं प्रसादप्रदानं क्रियताम् । यतः—

यः काकिणीमप्यपथप्रपन्नां
समुद्धरेन्निष्कसहस्रतुल्याम् ।
कालेषु कोटिष्वपि मुक्तहस्त-
स्तं राजसिंहं न जहाति लक्ष्मीः ॥ १२६ ॥

अन्यच्च—

क्रतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसंग्रहे ।

प्रियासु नारीष्वधनेषु बान्धवे-
ष्वतिव्ययो नास्ति नराधिपाष्टसु ॥१२७॥

यत.—

मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति हि ।
कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् १२८

राजाह—'कथमिह समयेऽतिव्ययो युज्यते ?

उक्त च—'आपदर्थे धनं रक्षेत्' इति ॥

मन्त्री ब्रूते—'श्रीमतः कथमापदः'? राजाह-कदाचिच्चलते लक्ष्मीः ।

मत्री ब्रूते—संचितापि विनश्यति । '

तद्देव ! कार्पण्य विमुच्य दानमानाभ्या स्वभटा पुरस्क्रियन्ताम्। तथा चोक्तम्-

परस्परं सुसंहृष्टास्त्यक्तुं प्राणान्सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषद्बलम् ॥१२९॥

अपर च—

सुभटाः शीलसंपन्नाः संहताः कृतनिश्चयाः ।
अपि पञ्चशतं शूरा निघ्नन्ति रिपुवाहिनीम् ॥१३०॥

किञ्च—

शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः ।
त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ १३१ ॥

यतः—

सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥१ ३२ ॥

ईदृशि प्रस्तावेऽमात्यास्तावदेव पुरस्कर्तव्या । तथा चोक्तम्—

यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी ।
स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३३ ॥

यत·—

धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनक्षिप्तः कार्याब्धौ स निमज्जति ॥१३४ ॥

शृणु देव !

**हर्षक्रोधौ समौ यस्य कोशः स्वल्पव्ययेन च ।**
**नित्यं भृत्यानुपेक्षा च तस्य स्याद्धनदा धरा ॥ १३५ ॥**
**येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।**
**अमात्या इति तान्राजा नावमन्येत्कदाचन ॥ १३६ ॥**

यत —

**महीभुजो मदान्धस्य मज्जतोऽकार्यसागरे ।**
**स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम् ॥ १३७ ॥'**

अथागत्य प्रणम्य मेघवर्णो ब्रूते-' देव ! दृष्टिप्रसाद कुरु ' इदानीं विपक्षो युद्धार्थी दुर्गद्वारि वर्तते । तद्देवपादादेशाद्बहिर्निःसृत्य स्वविक्रम दर्शयामि तेन देवपादानामानृण्यमुपगच्छामि । ' चक्रवाको ब्रूते—' मैवम्, यदि बहिर्निःसृत्य योद्धव्य तदा दुर्गाश्रयणमेव निष्प्रयोजनम् ।

अपरं च—

**विषमो हि यथा नक्रः सलिलान्निर्गतोऽवशः ।**
**वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत् ॥१३८॥**

देव ! स्वय गत्वा दृश्यता युद्धम् । यत—

**पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।**
**स्वामिनाधिष्ठितःश्वापि किं न सिंहायते ध्रुवम्॥१३९॥'**

अथ ते सर्वे दुर्गद्वार गत्वा महाहव कृतवन्त । अपरेद्युश्चित्रवर्णो राजा गृध्र-मुवाच—'तात ! स्वप्रतिज्ञातमधुना निर्वाहय ।' गृध्रो ब्रूते—' देव ! शृणु । तावत्—

**अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।**
**अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १४० ॥**

तत्तावदत्र नास्ति—

**उपजापश्चिरारोधोऽवस्कन्धस्तीव्रपौरुषम् ।**
**दुर्गस्य लंघनोपायाश्चत्वारः कथिता इमे ॥ १४१ ॥**

अत्र यथाशक्ति क्रियते यत्न ' । चित्रवर्णः कथयति ' एवमेव । ' ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु वृत्ते युद्धे दुर्गाभ्यन्तरगृहेष्वेकदा काकैरग्निर्निःक्षिप्तः । तत. ' गृहीत गृहीत दुर्गम् ' इति कोलाहल श्रुत्वाऽनेकगृहेषु च

पावकम्प्रदीप्त प्रत्यक्षेणावलोक्य राजहससैनिका बहवो दुर्गवासिनश्च सत्वर ह्रदं प्रविष्टा । यत –

**सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।**
**कार्यकाले यथाशक्ति कुर्यान्न तु विचारयेत् ॥ १४२ ॥**

राजहस स्वभावान्मन्दगति सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टित हिरण्यगर्भ सारसमाह--' सारस सेनापते ! ममानुरोधादात्मान कथ व्यापादयिष्यसि, त्वमधुना गन्तु शक्त ।तत्कृत्वा जल प्रविश्यात्मान परिरक्ष । अस्मत्पुत्र चूडामणिनामान सर्वज्ञसमत्या राजान करिष्यसि ।'सारसो ब्रूते–'देव न वक्तव्यमेव दु:सह वचा, यावच्चन्द्रार्कौ दिवि तिष्ठतस्तावद्विजयता देवः। अह देव' दुर्गाधिकारी । मन्मासासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रु' ।अपर च देव '

**दाता क्षमी गुणग्राही स्वामी भाग्येन लभ्यते ।'**

राजाह–' सत्यमेवैतत् । कि तु–

**शुचिर्दक्षोऽनुरक्तश्च जानेभृत्योऽपि दुर्लभः ॥ १४३ ॥**

सारसो ब्रूते–' शृणु देव !

**यदि समरमपास्य नास्ति मृत्यो-**
**र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।**
**अथ मरणमवश्यमेव जन्तोः**
**किमिति मुधा मलिनं यशः क्रियेत ॥ १४४ ॥**

अन्यच्च–

**भवेऽस्मिन्पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे ।**
**जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १४५ ॥**

देव ! त्व च स्वामी सर्वथा रक्षणीय । यत.–

**स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।**
**राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १४६ ॥**

अपि च–

**प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति ।**
**अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ १४७ ॥**

अपरं च--

**नरेशे जीवलोकोऽयं निमीलति निमीलति ।**
**उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १४८ ॥ '**

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः। तदा सत्वरमुपसृत्य सारसेन स्वदेहान्तरितो राजा । अथ कुक्कुटनखप्रहारजर्जरीकृतेन सारसेन स्वाङ्गेनाच्छाद्य राजा जले प्रक्षिप्तः कुक्कुटोऽपि सेनापतिना सारसेन स्वचञ्चुप्रहारेण व्यापादितः । पश्चात् सारसोऽपि बहुभिः पक्षिभिः सम्भूय व्यापादितः। अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा वन्दिभिर्जयशब्दैरानन्दितः स्वस्कन्धावारं जगाम ॥

अथ राजपुत्रैरुक्तम्--' तस्मिन् राजहंसबले स पुण्यवान्सारस एव, येन स्वदेहत्यागेन स्वामी रक्षितः । उक्तं चैतत्--

**जनयन्ति सुतान् गावः सर्वा एव गवाकृतीन् ।**
**विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम् ॥ १४९ ॥'**

विष्णुशर्मोवाच--' स तावत् सत्त्वक्रीतानक्षयाँल्लोकान्विद्याधरीपरिजनोऽनुभवतु महासत्त्वः । तथा चोक्तम्--

**आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।**
**भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १५० ॥**
**यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।**
**अक्षयाँल्लभते लोकान्यदि क्लैब्यं न गच्छति ॥ १५१ ॥**

विग्रहः श्रुतो भवद्भिः ।' राजपुत्रैरुक्तम्--' श्रुत्वा सुखिनो वयम् ' । विष्णुशर्माऽब्रवीत् ' अपरमप्येवमस्तु ।

**विग्रहः करितुरङ्गपत्तिभि-**
**र्नो कदापि भवतां महीभुजाम् ।**
**नीतिमन्त्रपवनैः समाहताः**
**संश्रयन्तु गिरिगह्वरं द्विषः ॥ १५२ ॥ '**

**इति श्रीविष्णुशर्मकृते हितोपदेशे विग्रहस्तृतीयः ॥ ३ ॥**



# सन्धिः ।



पुन. कथारम्भकाले राजपुत्रैरुक्तम्—' आर्य ! विग्रह श्रुतोऽस्माभि' । सन्धिरधुनाभिधीयनाम् ' । विष्णुशर्मणोक्तम्—' श्रूयताम् । सन्धिमपि कथयामि । यस्यायमाद्य श्लोक —

**वृत्ते महति सङ्ग्रामे राज्ञोर्निहतसेनयोः ।**
**स्थेयाभ्यां गृध्रचक्राभ्यां वाचा सन्धिः कृतः क्षणात् ॥१॥'**

राजपुत्रा ऊचु —कथमेतत् ? विष्णुशर्मा कथयति —

ततस्तेन राजहसेनोक्तम्—केनास्मद्दुर्गे नि क्षिप्तोऽग्नि —कि पारक्येण कि वास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन ? ' चक्रवाको ब्रूते—देव ! भवतो निष्कारणबन्धुरसौ मेघवर्ण. सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् ।' राजा क्षण विचिन्त्याह—'अस्ति तावदेव, मम दुर्दैवमेतत् । तथा चोक्तम्—

**अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।**
**कार्यं सुचरितं क्वापि दैवयोगाद्विनश्यति ॥ २ ॥ '**

मन्त्री ब्रूते—' उक्तमेवैतत्—

**विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।**
**आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः ॥ ३ ॥**

अपर च—

**सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।**
**स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥'**

राजाह—' कथमेतत् ? ' मन्त्री कथयति—

## कथा १.

अस्ति मगधदेशे फुल्लोत्पलाभिधान सर । तत्र चिर **संकटविकटनामानौ हंसौ** निवसत । तयोर्मित्र **कम्बुग्रीवनामा कूर्मश्च** प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्—' यदत्रास्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्या ' । तदाकर्ण्य कूर्मो हसावाह—'सुहृदौ !, श्रुतोऽय धीवरालाप । अधुना

किं मया कर्तव्यम् ?' हंसावाहतु:—"ज्ञायताम् । पुनस्तावत्प्रातर्यदुचितं तत्कर्तव्यम् । कूर्मो ब्रूते—'मैवम् । यतो दृष्टव्यतिकरोऽहमत्र । तथा चोक्तम्—

**अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।**
**द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ५ ॥'**

तावाहतुः—'कथमेतत् ?' कूर्मः कथयति—

## कथा २.

पुरास्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्र **अनागतविधाता** नामैको मत्स्यः । तेनालोचितम्—'अहं तावज्जलाशयान्तरं गच्छामि' इत्युक्त्वा ह्रदान्तरं गतः । अपरेण **प्रत्युत्पन्नमति**नाम्ना मत्स्येनाभिहितम्—'भविष्यदर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् ? तदुत्पन्ने यथाकार्यं तदनुष्ठेयम् । तथा चोक्तम्—

**उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।**
**वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा ॥ ६ ॥'**

**यद्भविष्यः** पृच्छति—'कथमेतत् ।' प्रत्युत्पन्नमतिः कथयति—

## कथा ३.

विक्रमपुरे **समुद्रदत्तो नाम वणिग**स्ति । तस्य **रत्नप्रभा नाम गृहिणी** स्वसेवकेन सह सदा रमते ।

**न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते ।**
**गावस्तृणमिवारण्ये प्रार्थयन्ति नवंनवम् ॥ ७ ॥**

अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेनावलोकिता । ततः सा बन्धकी सत्वरं भर्तुः समीपं गत्वाह—'नाथ ! एतस्य सेवकस्य महती निर्वृतिः । यतोऽयं चोरिकां कृत्वा कर्पूरं खादतीति मयास्य मुखमाघ्राय ज्ञातम् ।' तथा चोक्तम्—

**'आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।**
**षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ८ ॥'**

तच्छ्रुत्वा सेवकेन प्रकुप्योक्तम्—' नाथ ! यस्य स्वामिनो गृहे एतादृशी भार्या तत्र सेवकेन कथं स्थातव्यम् ? यत्र प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति । ' ततोऽसावुत्थाय चलितः, साधुना यत्नात्प्रबोध्य धृतः । अतोऽहं ब्रवीमि—' **उत्पन्नामापदम्** ' इत्यादि ॥

ततो यद्भविष्येणोक्तम्—

**' यदभावि न तद्भावि भावि चेन्न तदन्यथा ।**
**इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ९ ॥'**

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः । ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गभीरं नीरं प्रविष्टः । यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतोऽहं ब्रवीमि—' **अनागतविधाता** ' इत्यादि ॥

तद्यथाहमन्यह्रदं प्राप्नोमि तथा क्रियताम् । ' हंसावाहतुः—' जलाशयान्तरं प्राप्ते तव कुशलम् । स्थले गच्छतस्ते को विधिः ? ' कूर्म आह—' यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि स उपायो विधीयताम् । ' हंसौ ब्रूतः—' कथमुपायः संभवति ? ' कच्छपो वदति—' युवाभ्यां चञ्चूधृतं काष्ठखण्डमेकं मया मुखेनावलम्ब्य गन्तव्यम् । युवयोः पक्षबलेन मयापि सुखेन गन्तव्यम् । ' हंसौ ब्रूतः—' संभवत्येष उपायः । किं तु—

**उपायं चिन्तयन्प्राज्ञो ह्यपायमपि चिन्तयेत् ।**
**पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः ॥ १० ॥'**

कूर्मः पृच्छति—' कथमेतत् ? ' तौ कथयतः—

## कथा ४.

अस्त्युत्तरापथे गृध्रकूटो नाम पर्वतः । तत्रैव रेवातीरे न्यग्रोधपादपे **बकाः** निवसन्ति । तस्य वृक्षस्याधस्ताद्विवरे **सर्प**स्तिष्ठति । स च बकानां बालापत्यानि खादति । अथ शोकार्तानां बकानां विलापं श्रुत्वा केनचिद्बकेनाभिहितम्—' भो ! एवं कुरुत, यूयं मत्स्यानुपादाय नकुलविवरादारभ्य सर्पविवरं

यावदेकैकशो मत्स्यान् पंक्तिक्रमेण विकिरत, ततस्तदाहारलुब्धैर्नकुलैस्तद्वर्त्मना-गत्य सर्पो द्रष्टव्यः स्वभावद्वेषाद्व्यापादयितव्यश्च ।' तथानुष्ठिते तद्वृत्तम् । ततस्तत्र वृक्षे नकुलैर्बकशावकराव श्रुतः, पश्चात्तैर्वृक्षमारुह्य बकशावकाः खादिताः । अत आवां ब्रूवः–'**उपायं चिन्तयन्**' इत्यादि ॥

आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किञ्चिद्वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणम्, तत्सर्वथात्रैव स्थीयताम् ।' कूर्मो वदति-'किमहमप्राज्ञः? नाहमुत्तरं दास्यामि, किमपि न वक्तव्यम् ।' तथानुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च–"अहो महदाश्चर्यम्! पक्षिभ्यां कूर्मः समुह्यते ।' कश्चिद्वदति–'यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः ।' कश्चिद्वदति–'अत्रैव सरस्समीपे दग्ध्वा खादितव्योऽयम् ।'कश्चिद्वदति–'गृहं नीत्वा भक्षणीयः' इति । तत्परुषवचनं श्रुत्वा स कूर्मः कोपाविष्टो विस्मृतपूर्वसंस्कारः प्राह–'युष्माभिर्भस्म भक्षितव्यम् ।' इति वदन्नेव पतितस्तैर्व्यापादितश्च । अतोऽहं ब्रवीमि'**सुहृदां हितकामानाम्**'इत्यादि ॥

अथ प्रणिधिर्बकस्तत्रागत्योवाच–'देव! प्रागेव मया निगदितम् । दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति तच्च युष्माभिर्न कृतम्, तदनवधानस्य फलमनुभूतम् । दुर्गदाहो मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः ।' राजा निश्वस्याह–

**'प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।**
**स सुप्त इव वृक्षाग्रात्पतितः प्रतिबुद्ध्यते ॥ ११ ॥'**

प्रणिधिरुवाच–'इतो दुर्गदाहं विधाय गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्–'अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम् । तथा चोक्तम्–

**कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् ।**
**फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ १२ ॥'**

चक्रवाको ब्रूते–'देव! श्रुतं यत्प्रणिधिः कथयति?' राजाह–'ततस्ततः ।' प्रणिधिरवोचत्–ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम्–'देव! नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । यतः–

**अविचारयतो युक्तिकथनं तुषखण्डनम् ।**
**नीचेषूपकृतं राजन्वालुकास्विव मूत्रितम् ॥ १३ ॥**

महतामास्पदे नीचः कदापि न कर्तव्यः । तथा चोक्तम्–

**नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।**
**मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥ १४॥'**

चित्रवर्णः पृच्छति–' कथमेतत् ? ' मन्त्री कथयति–

## कथा ५.

अस्ति गौतमस्य महर्षेस्तपोवने **महातपा नाम मुनिः** । तत्र तेनाश्रमसन्निधाने **मूषिकशावकः** काकमुखाद्भ्रष्टो दृष्टः । ततः स्वभावदयात्मना तेन मुनिना नीवारकणैस्संवर्द्धितः । तं च मूषिकं खादितुमनुधावन् बिडालो मुनिना दृष्टः । पश्चात् तपःप्रभावात् तेन मुनिना स मूषिको बलिष्ठो बिडालः कृतः । स बिडालः कुक्कुराद्बिभेति । ततोऽसौ कुक्कुरः कृतः । कुक्कुरस्य ततो व्याघ्रान्महद्भयमभूत् । तदनन्तरं स व्याघ्रः कृतः । अथ तं व्याघ्रं मुनिर्मूषिकनिर्विशेषं पश्यति । अतः सर्वे तत्रत्या व्याघ्रं दृष्ट्वा वदन्ति । अनेन मुनिना मूषिको व्याघ्रतां नीतः । एतच्छ्रुत्वा स व्याघ्रः सव्यथमचिन्तयत्–यावदनेन मुनिना जीवितव्यं तावदिदं मे स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते इत्यालोच्य मुनिं हन्तुं समुद्यतः । मुनिस्तस्य चिकीर्षितं ज्ञात्वा ' पुनर्मूषिको भव ' इत्युक्त्वा मूषिक एव कृतः । अतोऽहं ब्रवीमि–' **नीचः श्लाघ्यपदम्** ' इत्यादि ॥

अपरं च देव ! सुकरमिदमिति न मन्तव्यम् । शृणु–

**भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।**
**अतिलोभाद्बकः पश्चान्मृतः कर्कटकग्रहात् ॥ १५ ॥'**

चित्रवर्णः पृच्छति–' कथमेतत् ? ' मन्त्री कथयति–

## कथा ६.

अस्ति मालवदेशे पद्मगर्भनामधेयं सरः । तत्रैको **वृद्धो बकः** सामर्थ्यहीन उद्विग्नमिवात्मानं दर्शयित्वा स्थितः । स च **केनचित्कुलीरेण** दृष्टः दूरादेव

पृष्टश्च—' किमिति भवानत्राहारत्यागेन तिष्ठति ? ' बकेनोक्तम्—' मत्स्या मम जीवनहेतव । ते कैवर्तैरागत्य व्यापादयितव्या इति नगरोपान्ते कैवर्तालापो मया श्रुत. । अतो वर्तनाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वाहारेऽप्यनादर कृत । ततो मत्स्यैरालोचितम्—' इह समये तावदुपकारक एवाय लक्ष्यते तदयमेव यथाकर्तव्य पृच्छयताम् । तथा चोक्तम्—

**उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ १६ ॥**

मत्स्या ऊचु —'भो बक ! कोऽत्रास्माक रक्षणोपाय ?' बको ब्रूते—' अस्ति रक्षणोपायो जलाशयान्तराश्रयणम्, तत्राहमेकैकशो युष्मान्नयामि ।' मत्स्या भयादाहु —'एवमस्तु । ' ततोऽसौ बकस्तान्मत्स्यानेकैकशो नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति ' ते मया जलाशयान्तरे प्रस्थापिता' । ' अनन्तर कुलीरस्तमुवाच—' भो बक ! मामपि तत्र नय ।' ततो बकोऽप्यपूर्वकुलीरमासार्थी सादर त नीत्वा स्थले धृतवान् । कुलीरोऽपि मत्स्यकण्टकाकीर्णं तत्स्थलमालोक्याचिन्तयत्—' हा ! हतोऽस्मि मन्दभाग्य । भवतु । इदानीं समयोचित व्यवहरिष्यामि । यत'—

**तावद्भयात्तु भेतव्यं यावद्भयमनागतम् ।**
**आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ १७ ॥**

अपर च--

**अभियुक्तो यदा पश्येन्न किञ्चिद्धितमात्मनः ।**
**युद्धयमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ १८ ॥**

इत्यालोच्य कुलीरस्तस्य ग्रीवा चिच्छेद । स बक पञ्चत्व गतः । अतोऽह ब्रवीमि—'**भक्षयित्वा बहून्मत्स्यान्** ' इत्यादि ॥

ततश्चित्रवर्णोऽवदत् ' शृणु तावन्मन्त्रिन् ! मयैतदालोचितमस्ति । अत्रावस्थितेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावन्त्यस्माकमुपनेतव्यानि । तेनास्माभिर्महासुखेन विन्ध्याचले स्थातव्यम् । ' **दूरदर्शी** विहस्याह—' देव !

**अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति ।**
**स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा ॥ १९ ॥**

राजाह—' कथमेतत् ? ' मन्त्री कथयति—

## कथा ७.

अस्ति देवीकोटनाम्नि नगरे **देवशर्मा नाम ब्राह्मणः** । तेन महाविषुवत्सक्रान्त्या सक्तुपूर्णशराव एक प्राप्त । तमादायासौ कुम्भकारस्य भाण्डपूर्णमण्डपैकदेशे रौद्रेणाकुलित सुप्त । तत सक्तुरक्षार्थ हस्ते दण्डमेकमादायाचिन्तयत्—" यद्यह सक्तुशराव विक्रीय दशकपर्दकान्प्राप्स्यामि,तदात्रैव तै कपर्दकैर्घटशरावादिकमुपक्रीयानेकवा वृद्धैस्तद्धनै पुन पुन. पूगवस्त्रादिकमुपक्रीय विक्रीय वाणिज्य कृत्वा लक्षसख्यानि धनानि कृत्वा विवाहचतुष्टय करिष्यामि, अनन्तर तासु सपत्नीषु रूपयौवनवती या तस्यामधिकानुराग करिष्यामि, सपत्न्यो यदान्योन्य द्वन्द्व करिष्यन्ति तदा कोपाकुलोऽह ता लगुडेन ताडयिष्यामि " इत्यभिधाय लगुड क्षिप्त । तेन सक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्नानि । ततस्तेन शब्देनागतेन कुम्भकारेण तथाविधानि भाण्डान्यवलोक्य ब्राह्मणस्तिरस्कृतो मण्डपाद्बहिष्कृतश्च । अतोऽह ब्रवीमि—' **अनागतवती चिंताम्** ' इत्यादि ॥

ततो राजा रहसि गृध्रमुवाच—' तात ! यथा कर्तव्य तथोपदिश । ' गृध्रो ब्रूते—

**' मदोद्धतस्य नृपतेः संकीर्णस्येव दन्तिनः ।**
**गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम् ॥२०॥**

शृणु देव ! किमस्माभिर्बलदर्पाद्दुर्ग भग्नम् , न । कि तु तव प्रतापाधिष्ठितेनोपायेन । ' राजाह—' भवतामुपायेन । गृध्रो ब्रूते—

' यद्यस्मद्वचन क्रियते तदा स्वदेशे गम्यताम् । अन्यथा वर्षाकाले प्राप्ते तुल्यबलेन सह पुनर्विग्रहे सत्यस्माक परभूमिष्ठाना स्वदेशगमनमपि दुर्लभ भविष्यति । सुखशोभार्थ सधाय गम्यताम् । दुर्ग भग्न कीर्तिश्च लब्धैव मम समत तावदेतत् । यत.—

**यो हि धर्मं पुरस्कृत्य हित्वा भर्तुः प्रियाप्रिये ।**
**अप्रियाण्याह तथ्यानि तेन राजा सहायवान् ॥ २१ ॥**

अन्यच्च—

**सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च ।**
**युधि सन्देहदोलास्थं को हि कुर्यादबालिशः ॥ २२ ॥**

अपरं च—

**संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि ।**
**न हि संशयितं कुर्यादित्युवाच बृहस्पतिः ॥ २३ ॥**

अपि च—

**युद्धे विनाशो भवति कदाचिदुभयोरपि ।**
**सुन्दोपसुन्दावन्योन्यं नष्टौ तुल्यबलौ न किम् ॥२४ ॥**

राजोवाच—'कथमेतत् ?' मन्त्री कथयति—

## कथा ८.

पुरा दैत्यौ महोदरौ **सुन्दोपसुन्दनामानौ** महता क्लेशेन त्रैलोक्यकामनया चिराच्चन्द्रशेखरमाराधितवन्तौ । ततस्तयोर्भगवान्परितुष्टः 'वरं वरयतम्' इत्युवाच । अनन्तरं तयोः कण्ठाधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितवन्तौ, यद्यावयोर्भवान्परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु । अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया विचारमूढयोः पार्वती प्रदत्ता । ततस्तस्या रूपलावण्यलुब्धाभ्यां जगद्घातिभ्यां मनसोत्सुकाभ्यां पापतिमिराभ्यां ममममेत्यन्योन्यकलहाभ्यां प्रमाणपुरुषः कश्चित्पृच्छ्यतामिति मतौ कृतायां स एव भट्टारको वृद्धद्विजरूपः समागत्य तत्रोपस्थितः । अनन्तरम् 'आवाभ्यामियं स्वबललब्धा । कस्येयमावयोर्भवति ?' इति ब्राह्मणमपृच्छताम् ।

ब्राह्मणो ब्रूते—

**'ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि ।**
**धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २५ ॥**

तद्युवा शत्रुधर्मानुगौ । युद्ध एव युवयोर्नियमः ।' इत्यभिहिते सति ' साधूक्तमनेन' इति कृतान्योन्यतुल्यवीर्यौ समकालमन्योन्यघातेन विनाशमुपगतौ । ' अतोऽह ब्रवीमि—' **संधिमिच्छेत्समेनापि** ' इत्यादि ॥

राजाह—' प्रागेव किं नोक्त भवद्भिः ? ' मन्त्री ब्रूते—' मद्वचन किमवसानपर्यन्तं श्रुत भवद्भिः । तदापि मम संमत्या नाय विग्रहारम्भ । साधुगुणयुक्तोऽय हिरण्यगर्भो न विग्राह्यः । तथा चोक्तम्—

**सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान्बली ।**
**अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः ॥ २६ ॥**
**सत्योऽनुपालयेत्सत्यं सन्धितो नैति विक्रियाम् ।**
**प्राणबाधेऽपि सुव्यक्तमार्यो नायात्यनार्यताम् ॥ २७ ॥**
**धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।**
**प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥ २८ ॥**
**सन्धिः कार्योऽप्यनार्येण विनाशे समुपस्थिते ।**
**विना तस्याश्रयेणार्यो न कुर्यात्कालयापनम् ॥ २९ ॥**
**संहतत्वाद्यथा वेणुर्निबिडैः कण्टकैर्वृतः ।**
**न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥ ३० ॥**
**बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।**
**प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ३१ ॥**
**जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।**
**अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३२ ॥**
**अनेकयुद्धविजयी संन्धानं यस्य गच्छति ।**
**तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ ३३ ॥**

तत्र तावद्बहुभिर्गुणैरुपेत सन्धेयोऽयं राजा । ' चक्रवाकोऽवदत्—'प्रणिधे ! सर्वत्रावव्रज सर्वमवगतम् । गत्वा पुनरागमिष्यसि । ' अथ राजा चक्रवाक पृष्टवान्—'मन्त्रिन् ! असन्धेया' कति ताञ्छ्रोतुमिच्छामि ? ' मत्री ब्रूते—'देव ! कथयामि । शृणु—

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ ३४ ॥
विरक्तप्रकृतिश्चैव विषयेष्वातिसक्तिमान् ।
अनेकचित्तमंत्रस्तु देवब्राह्मणनिन्दकः ॥ ३५ ॥
दैवोपहतकश्चैव तथा दैवपरायणः
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ ३६ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३७ ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ३८ ॥
बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्माज्ज्ञातुं शक्तो न बालिशः ॥ ३९ ॥
उत्साहशक्तिहीनत्वाद्वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ४० ॥
सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृतः ॥ ४१ ॥
भीरुर्युद्धपरित्यागात्स्वयमेव प्रणश्यति ।
तथैव भीरुपुरुषः संग्रामे तैर्विमुच्यते ॥ ४२ ॥
लुब्धस्यासंविभागित्वान्न युद्ध्यन्तेऽनुयायिनः ।
लुब्धानुजीविकैरेष दानभिन्नैर्निहन्यते ॥ ४३ ॥
संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वातिसक्तिमान् ॥ ४४ ॥
अनेकचित्तमन्त्रस्तु भेद्यो भवति मंत्रिणा ।
अनवस्थितचित्तत्वात्कार्यतः स उपेक्ष्यते ॥ ४५ ॥
सदा धर्मबलीयस्त्वद्देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येष दैवोपहतकस्तथा ॥ ४६ ॥

**संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।**
**इति दैवपरो ध्यायन्नात्मानमपि चेष्टते ॥ ४७ ॥**
**दुर्भिक्षव्यसनी चैव स्वयमेव विषीदति ।**
**बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४८ ॥**
**अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।**
**ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ४९ ॥**
**बहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।**
**येनैव गच्छति पथा तेनैवाशु विपद्यते ॥ ५० ॥**
**अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।**
**कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ५१ ॥**
**सत्यधर्मव्यपेतेन संदध्यान्न कदाचन ।**
**स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥५२॥**

अपरमपि कथयामि । सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः **षाड्गुण्यम्,** कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति **पञ्चाङ्गो मन्त्रः,** सामदानभेददण्डाश्चत्वार **उपायाः,** उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिश्चेति **शक्तित्रयम्,** एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः । यतः —

**या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।**
**सा श्रीर्नीतिविदं पश्य चञ्चलापि प्रधावति ॥ ५३ ॥**

तथा चोक्तम्—

**वित्तं यदा यस्य समं विभक्तं**
**गूढश्चरः सन्निभृतश्च मन्त्रः ।**
**न चाप्रियं प्राणिषु यो ब्रवीति**
**स सागरान्तां पृथिवीं प्रशास्ति ॥ ५४ ॥**

किंतु यद्यपि महामन्त्रिणा गृध्रेण सन्धानमुपन्यस्तं तथापि तेन राज्ञा संप्रतिभूतजयदर्पान्न मन्तव्यम् । देव ! तदेवं क्रियताम् । सिंहलद्वीपस्य महाबलो नाम सारसो राजास्मन्मित्रं जम्बूद्वीपे कोपं जनयतु । यतः —

**सुगुप्तिमाधाय सुसंहतेन**
**बलेन वीरो विचरन्नरातिम् ।**
**संतापयेद्येन समं सुतप्त-**
**स्तप्तेन सन्धानमुपैति तप्तः ॥ ५५ ॥'**

राज्ञा 'एवमस्तु' इति निगद्य विचित्रनामा बकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रहितः । अथ प्रणिधिः पुनरागत्योवाच—'देव ! श्रूयतां तावत् तत्रत्यप्रस्तावः । एवं तत्र गृध्रेणोक्तम्—'देव ! यन्मेघवर्णस्तत्र चिरमुषितः स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो न वा इति । ततोऽसौ चित्रवर्णेन राज्ञा समाहूय पृष्टः 'वायस ! कीदृशोऽसौ हिरण्यगर्भः ? चक्रवाको मन्त्री वा कीदृशः ?' वायस उवाच—'देव ! हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः । सत्यवाक् चक्रवाकसमो मन्त्री न क्वाप्यवलोक्यते ।' राजाह—'यद्येवं तदा कथमसौ त्वया वञ्चितः ? विहस्य मेघवर्णः प्राह—'देव !

**विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।**
**अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ ५६ ॥**

शृणु देव ! तेन मन्त्रिणाहं प्रथमदर्शन एव ज्ञातः । किं तु महाशयोऽसौ राजा । तेन मया विप्रलब्धः । तथा चोक्तम्—

**आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।**
**स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा ॥ ५७ ॥'**

राजोवाच 'कथमेतत् ?' मेघवर्णः कथयति—

## कथा ९.

अस्ति गौतमस्यारण्ये प्रस्तुतयज्ञः **कश्चिद्ब्राह्मणः** । स च यज्ञार्थं ग्रामान्तरं गत्वा **छाग**मुपक्रीय स्कन्धे नीत्वा गच्छन्धूर्तत्रयेणावलोकितः । ततस्ते धूर्ता यद्येष च्छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य प्रान्तरवृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रतीक्ष्य पथि स्थिताः । तत्रैकेन धूर्तेन गच्छन्स ब्राह्मणोऽभिहितः । 'भो ब्राह्मण ! किमिति कुक्कुरः स्कन्धेनोह्यते ?' विप्रेणोक्तम्—नायं श्वा, किंतु यज्ञच्छागः । अथानन्तरं पुनर्द्वितीयेन धूर्तेन

क्रोशमात्रस्थितेन तथैवोक्तम् । तदाकर्ण्य ब्राह्मणश्छाग भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः । यतः—

**मतिर्दोलायते सत्यं सतामपि खलोक्तिभिः।**
**ताभिर्विश्वासितश्चासौ म्रियते चित्रकर्णवत् ॥ ५८ ॥'**

राजाह—' कथमेतत् ?' स कथयति—

## कथा १०.

अस्ति कस्मिंश्चिद्देशे **मदोत्कटो नाम सिंहः** । तस्य सेवकास्त्रय.— **काको व्याघ्रो जम्बुकश्च** । अथ तैर्भ्रमद्भिः **कश्चिदुष्ट्रो** दृष्टः पृष्टश्च— ' कुतो भवानागत ?' स चात्मवृत्तान्तमकथयत् । ततस्तैर्नीत्वा सिंहेऽसौ समर्पित', तेनाभयवाच दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापित. । एव कालो गच्छति । अथ कदाचित्सिंहस्य शरीरवैकल्याद्भूरिवृष्टिकारणाच्चाहारमलभमानास्ते व्यग्रा बभूवुः । ततस्तैरालोचितम्—' चित्रकर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयताम् । किमनेन कण्टकभुजा ।' व्याघ्र उवाच—' स्वामिनाभयवाच दत्त्वाऽनुगृहीतस्तत्कथमेव सभवति काको ब्रूते—' इह समये परिक्षीण स्वामी पापमपि करिष्यति । यत'—

**त्यजेत्क्षुधार्ता महिला स्वपुत्रं**
**खादेत्क्षुधार्ता भुजगी स्वमण्डम् ।**
**बुभुक्षितः किं न करोति पापं**
**क्षीणा नरा निष्करुणा भवन्ति ॥ ५९ ॥**

अन्यच्च—

**मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।**
**लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित् ॥६०॥'**

इति सञ्चिन्त्य सर्वे सिंहान्तिक जग्मु' । सिंहेनोक्तम्—' आहारार्थं किञ्चित्प्राप्तम् ?' तैरुक्तम—' यत्नादपि न प्राप्त किञ्चित् ' । सिंहेनोक्तम्—' कोऽधुना जीवनोपाय. । काको वदति—' देव ! स्वाधीनाहारपरित्यागात्सर्वनाशोऽयमुपस्थित. !' सिंहेनोक्तम्—' अत्राहार' कः स्वाधीन ?' काकः कर्णे कथयति—

' चित्रकर्ण. ' इति । सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति ब्रूते च अभयवाचं दत्त्वा धृतोऽयमस्माभि. । तत्कथमेवं सम्भवति । तथा च-

**न भूप्रदानं न सुवर्णदानं**
**न गोप्रदानं न तथान्नदानम् ।**
**यथा वदन्तीह महाप्रदानं**
**सर्वेषु दानेष्वभयप्रदानम् ॥ ६१ ॥**

अन्यच्च-

**सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम् ।**
**तत्फलं लभते सम्यग्रक्षिते शरणागते ॥ ६२ ॥**

काको ब्रूते-' नासौ स्वामिना व्यापादयितव्य । किं त्वस्माभिरेव तथा कर्तव्य यथासौ स्वयमेव स्वदेहदानमङ्गीकरोति ' सिंहस्तच्छ्रुत्वा तूष्णीं स्थित' । ततोऽसौ लब्धावकाश कूटं कृत्वा सर्वानादाय सिंहान्तिकं गत । अथ काकेनोक्तम्-' देव ! यत्नादप्याहारो न प्राप्त । अनेकोपवासखिन्न. स्वामी । तदिदानीं मदीयमांसमुपभुज्यताम् । यत -

**स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु ।**
**समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम् ॥ ६३ ॥'**

सिंहेनोक्तम्-' वरं प्राणपरित्याग । न पुनरीदृशि कर्मणि प्रवृत्ति ' । जम्बुकेनापि तथोक्तम् । तत. सिंहेनोक्तम्-' मैवम् ' अथ व्याघ्रेणोक्तम्-' मद्देहेन जीवतु स्वामी ' सिंहेनोक्तम्-' न कदाचिदेवमुचितम् ' । अथ चित्रकर्णोऽपि जातविश्वासस्तथैवात्मदानमाह । ततस्तद्वचनात्तेन व्याघ्रेणासौ कुक्षिं विदार्य व्यापादित सर्वैर्भक्षित । अतोऽहं ब्रवीमि-**'मतिर्दोलायते सत्यम्'** इत्यादि ॥

ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य च्छागं त्यक्त्वा ब्राह्मण. स्नात्वा गृहं ययौ । स च्छागस्तैर्धूर्तैर्नीत्वा भक्षित' । अतोऽहं ब्रवीमि-**' आत्मौपम्येन यो वेत्ति'** इत्यादि ॥

राजाह-' मेघवर्ण ! कथं शत्रुमध्ये त्वया चिरमुषितम् । कथं वा तेषामनुनय कृत' । ' मेघवर्ण उवाच-' देव ! स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते । पश्य-

**लोको वहति किं राजन्न मूर्ध्ना दग्धुमिन्धनम् ।**
**क्षालयन्नपि वृक्षांघ्रिं नदीवेगो निकृन्तति ॥ ६४ ॥**

तथा चोक्तम्—

**स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान् ।**
**यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः ॥ ६५ ॥'**

राजाह—'कथमेतत् ?' मेघवर्ण कथयति—

## कथा ११.

अस्ति जीर्णोद्याने **मन्दविषो नाम सर्पः** । सोऽतिजीर्णतयाहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः । ततो दूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च—'किमिति त्वमाहारं नान्विष्यसि ?' सर्पोऽवदत् 'गच्छ भद्र ! मम मन्दभाग्यस्य वृत्तान्तप्रश्नेन किम् ?' ततः संजातकौतुकः स भेकः 'सर्वथा कथ्यताम्' इति तं सर्पमाह । सर्पोऽप्याह—'भद्र ! अत्र ब्रह्मपुरे कौण्डिन्यनाम्नः श्रोत्रियस्य विंशतिवर्षीयः पुत्रः सर्वगुणसम्पन्नो दुर्दैवान्मया नृशंसेन दष्टः । ततस्तं पुत्रं सुशीलनामानं मृतमालोक्य कौण्डिन्यः शोकेन मूर्च्छितः पृथ्वीतले लुलोठ । अनन्तरं ब्रह्मपुरवासिनः बान्धवास्तत्रागत्योपविष्टाः । तथा चोक्तम्—

**उत्सवे व्यसने युद्धे दुर्भिक्षे शत्रुनिग्रहे ।**
**राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ६६ ॥**

तत्र कपिलो नाम स्नातकोऽवदत्—'अरे कौण्डिन्य ! मूढोऽसि येनैवं विलपसि । शृणु—

**क्रोडीकरोति प्रथमं यथा जातमनित्यता ।**
**धात्रीव जननी पश्चात्तथा शोकस्य कः क्रमः ॥ ६७ ॥**
**क्व गताः पृथिवीपालाःससैन्यबलवाहनाः ।**
**वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ ६८ ॥**
**प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।**
**आमकुम्भ इवाम्भःस्थो विशीर्णः सम्विभाव्यते ॥ ६९ ॥**

आसन्नतरतामेति मृत्युर्जन्तोर्दिनेदिने ।
आघातं नीयमानस्य वध्यस्येव पदेपदे ॥ ७० ॥

यतः—

अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ७१ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७२ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेतद्वद्भूतसमागमः ॥ ७३ ॥

अन्यच्च—

पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ७४ ॥
यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽपि निखन्यन्ते हृदये शोकशंकवः ॥ ७५ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ७६ ॥

अपि च—

संयोगो हि वियोगस्य संसूचयति संभवम् ।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७७ ॥
आपातरमणीयानां संयोगानां प्रियैः सह ।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥ ७८ ॥

अपरं च—

व्रजन्ति न निवर्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥ ७९ ॥
सुखास्वादपरो यस्तु संसारेऽसत्समागमः ।
स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥ ८० ॥

अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ८१ ॥

सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ८२ ॥

संचिन्त्यसंचिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य ।
वर्षाम्बुसिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८३ ॥

यामेव रात्रिं प्रथमामुपैति
गर्भे निवासं नरवीरलोकः ।
ततःप्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥ ८४ ॥

अत' ससार विचारय । शोकोऽयमज्ञानस्य प्रपञ्च । पश्य—

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ॥ ८५ ॥

तद्भद्रात्मानमनुसन्धेहि । शोकचर्चा परिहर । यत —

अकाण्डपातजातानां गात्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ ८६ ॥'

ततस्तद्वचन निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्—' तदलमिदानीं गृहनरकवासेन । वनमेव गच्छामि ।' कपिल. पुनराह—

' वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ८७ ॥

यत –

दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ ८८ ॥

उक्त च–

वृत्त्यर्थं भोजनं येषां सन्तानार्थं च मैथुनम् ।
वाक्सत्यवचनार्थाय दुर्गाण्यपि तरन्ति ते ॥ ८९ ॥

तथा हि–

आत्मा नदी संयमपुण्यतीर्था
सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र
न वारिणा शुद्ध्यति चान्तरात्मा ॥ ९० ॥

विशेषतश्च–

जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम् ।
संसारमिममुत्पन्नमसारं त्यजतः सुखम् ॥ ९१ ॥

यतः–

दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ९२ ॥ '

कौण्डिन्यो ब्रूते–' एवमेव । ततोऽह तेन शोकाकुलेन ब्राह्मणेन शप्तः–यद–द्यारम्य मण्डूकाना वाहन भविष्यसि ' इति । कपिलो ब्रूते–' सम्प्रत्युपदेशासहिष्णुर्भवान् । शोकाविष्ट ते हृदयम् । तथापि कार्यं शृणु–

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ९३ ॥

अन्यच्च–

कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
स्वभार्यां प्रति कर्तव्यः सैव तस्य हि भेषजम् ॥ ९४ ॥'

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहण कृतवान् । अतोऽहं ब्राह्मणशापान्मण्डूकान्वोढुमत्र तिष्ठामि ।' अनन्तरं तेन मण्डूके नगत्वा मण्डूकनाथस्य जालपादनाम्नोऽग्रे तत्कथितम् । ततोऽसावागत्य मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढवान् । स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रम बभ्राम । ततो परेद्युश्चलितुमसमर्थ त मण्डूकनाथोऽवदत्—'किमद्य भवान् मन्दगति' ।' सर्पो ब्रूते—' देव ! आहारविरहादसमर्थोऽस्मि ।' मण्डूकनाथोऽवदत्—' अस्मदाज्ञया मण्डूकान्भक्षय । ' ततः ' गृहीतोऽय महाप्रसाद ' इत्युक्त्वा क्रमशो मण्डूकान्खादितवान् । अतो निर्मण्डूक सरो विलोक्य मण्डूकनाथोऽपि तेन खादित' । अतोऽह ब्रवीमि—' **स्कन्धेनापि वहेच्छत्रून्** ' इत्यादि ॥

देव ! यात्विदानीं पुरावृत्ताख्यानकथनम् । सर्वथा संधेयोऽय हिरण्यगर्भो राजा सन्धीयतामिति मे मति ।' राजोवाच—'कोऽय भवतो विचारः ! यतो जितस्तावदयमस्माभिस्ततो यद्यस्मदाज्ञया सेवाया वसति तदास्ता नो चेद्विगृह्यताम् । अत्रान्तरे जम्बूद्वीपादागत्य शुकेनोक्तम्—' देव ! सिहलद्वीपस्य सारसो राजा सम्प्रति जम्बूद्वीपमाक्रम्यावतिष्ठते ।' राजा ससभ्रम ब्रूते—' कि किम् ?' शुक पूर्वोक्त कथयति । गृध्र स्वगतमुवाच ' साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ ! साधु साधु ।' राजा सकोपमाह—' आस्ता तावदयम् । गत्वा तत्रैव समूलमुन्मूलयामि ' दूरदर्शी विहस्याह—

**' न शरन्मेघवत्कार्यं वृथैव घनगर्जितम् ।**
**परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ९५ ॥**

अपरं च -

**एकदा न विगृह्णीयाद्बहूनराजाभिघातिनः ।**
**सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम् ॥ ९६ ॥**

देव ! किमिति विना सधान गमनमस्ति । यतस्तदास्मत्पश्चात्प्रकोपोऽनेन कर्तव्य' । अपर च—

**योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ।**
**स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा ॥ ९७ ॥'**

राजाह—' कथमेतत् ?' दूरदर्शी कथयति—

तद्देव 'यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जीक्रियताम् ।' तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेणोपगम्य सत्कृत्यानीय राजदर्शनं कारितो दत्तासने चोपविष्टः । चक्रवाक उवाच—'युष्मदायत्तं सर्वम् । स्वेच्छयोपभुज्यतामिदं राज्यम् ।' राजहंसो ब्रूते—'एवमेव ।' दूरदर्शी कथयति 'एवमेवैतत् । किं त्विदानीं बहुप्रपञ्चवचनं निष्प्रयोजनम् । यत —

**लुब्धमर्थेन गृह्णीयात्स्तब्धमञ्जलिकर्मणा ।**
**मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥ १०८ ॥**

अन्यच्च—

**सद्भावेन हरेन्मित्रं सम्भ्रमेण तु बान्धवान् ।**
**स्त्रीभृत्यौ दानमानाभ्यां दाक्षिण्येनतराञ्जनान् ॥ १०९ ॥**

तदिदानीं संधाय गम्यताम् । महाप्रतापश्चित्रवर्णो राजा ' चक्रवाको ब्रूते—'यथा संधानं कार्यं तदप्युच्यताम् ।' राजहंसो ब्रूते—'कति प्रकाराः सन्धीनां सम्भवन्ति ।' गृध्रो ब्रूते—'कथयामि श्रूयताम्—

**बलीयसाभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।**
**आपन्नः संधिमन्विच्छेत्कुर्वाणः कालयापनम् ॥ ११० ॥**
**कपाल उपहारश्च सन्तानः सङ्गमस्तथा ।**
**उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ १११ ॥**
**अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।**
**परिक्रयस्तथोच्छिन्नस्तथा च परिभूषणः ॥ ११२ ॥**
**स्कन्धोपनेयः सन्धिश्च षोडशैते प्रकीर्तिताः ।**
**इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥ ११३ ॥**
**कपालसन्धिर्विज्ञेयः केवलं समसन्धितः ।**
**सम्प्रदानाद्भवति य उपहारः स उच्यते ॥ ११४ ॥**
**सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः ।**
**सद्भिस्तु सङ्गतः सन्धिर्मैत्रीपूर्व उदाहृतः ॥ ११५ ॥**
**यावदायुष्प्रमाणस्तु समानार्थप्रयोजनः ।**
**सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥ ११६ ॥**

सङ्गतः सन्धिरेवायं प्रकृष्टत्वात्सुवर्णवत् ।
तथान्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः ॥ ११७॥
आत्मकार्यस्य सिद्धिं तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ११८ ॥
मयास्योपकृतं पूर्वं ममाप्येष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥११९॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ १२० ॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥ १२१ ॥
आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन्पणस्तु क्रियते स सन्धिः पुरुषान्तरः ॥१२२॥
त्वयैकेन मदीयोऽर्थः सम्प्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्यात्सोऽदृष्टपुरुषः स्मृतः ॥१२३ ॥
यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ।
सन्धीयते सन्धिविद्भिः स चादिष्ट उदाहृतः ॥ १२४ ॥
स्वसैन्येन तु संधानमात्मादिष्ट उदाहृतः ।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ १२५ ॥
कोशांशेनार्धकोशेन सर्वकोशेन वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥ १२६ ॥
भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ १२७ ॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं संधिविचक्षणाः ॥१२८॥
परस्परोपकारस्तु मैत्री सम्बन्धतस्तथा ।
उपहारश्च विज्ञेयाश्चत्वारश्चैव संधयः ॥ १२९ ॥

एक एवोपहारस्तु संधिरेव मतो मम ।
उपहारविभेदास्तु सर्वे मैत्रविवर्जिताः ॥ १३० ॥
अभियोगी बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहारं विना तस्मात्संधिरन्यो न विद्यते ॥१३१ ॥'

राजाह-'भवन्तो महान्त पण्डिताश्च । तदास्माक यथाकार्यमुपदिश्यताम् ।' दूरदर्शी ब्रूते—'आः ! किमेवमुच्यते—

आधिव्याधिपरीतापादद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ १३२ ॥
जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत्कल्याणमाचरेत् ॥१३३॥

वाताभ्रविभ्रममिदं वसुधाधिपत्यं
आपातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥ १३४ ॥

मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ १३५ ॥

तन्मम समतेन तदेव क्रियताम् । यत.—

अश्वमेधसहस्राणि सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ १३६ ॥

अत· सत्याभिधानदिव्यपुर सरयोरप्यनयोर्भूपालयो. काञ्चनाभिधानसंधिर्वि-
ीयताम् । ' सर्वज्ञो ब्रूते—'एवमस्तु ।' ततो राजहंसेन राज्ञा वस्त्रालकारोपहारै·
ा मन्त्री दूरदर्शी पूजितः । प्रहृष्टमनाश्चक्रवाक गृहीत्वा राज्ञो मयूरस्य संनिधान
ातः । तत्र चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद्बहुमानदानपुरःसर सभाषितस्तथा-
ेधं स्वीकृत्य राजहससमीप प्रस्थापितः । दूरदर्शी ब्रूते—'देव ! सिद्धं नः समी-
ृतम् । इदानीं स्वस्थानमेव विन्ध्याचल व्यावृत्य प्रतिगम्यताम् । अथ सर्वे स्वस्थान
ाप्य मनोऽभिलषितं फल प्राप्नुवन्तु । इति ॥

विष्णुशर्मणोक्तम्—'अपरं किं कथयामि ? कथ्यताम्। राजपुत्रा ऊचुः 'आर्य ! तव प्रसादाद्राज्यव्यवहाराङ्गं ज्ञातम्। ततः सुखिनो वयम्। विष्णुशर्मोवाच—यद्यप्येवम्। तथाप्यपरमपीदमस्तु—

**संधिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा**
**सन्तः सन्तु निरापदः सुकृतिनां कीर्तिश्चिरं वर्धताम्।**
**नीतिर्वारविलासिनीव सततं वक्षःस्थले संस्थिता**
**वक्त्रं चुम्बतु मन्त्रिणामहरहर्भूयान्महानुत्सवः॥१३७॥'**

**इति विष्णुशर्मविरचिते हितोपदेशे सन्धिश्चतुर्थः॥ ४ ॥**

**समाप्तोऽयं हितोपदेशः॥**

---



**पुस्तक मिलनेका ठिकाना—**

**गङ्गाविष्णु श्रीकृष्णदास,**
**"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,**
**कल्याण—बंबई.**

**खेमराज श्रीकृष्णदास,**
**"श्रीवेंकटेश्वर" स्टीम् प्रेस,**
**खेतवाडी—बंबई**